ISSN :- 0974 - 8946

अनुसन्धान-प्रकाशन-विभागीया

त्रैमासिकी शोध-पत्रिका

# शोध-प्रभा

(A REFEREED QUARTERLY RESEARCH JOURNAL)

३९ वर्षे द्वितीयोऽङ्कः (अप्रैलमासाङ्कः) २०१४ ई०

सम्पादकः

प्रो० रमेशकुमारपाण्डेयः

कुलपतिः (प्रभारी)

सहसम्पादकः

डॉ० ज्ञानधरपाठकः



प्रकाशन-स्थलम्

श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठम्

(मानितविश्वविद्यालयः)

नवदेहली-११००१६

ISSN :- 0974 - 8946

अनुसन्धान-प्रकाशन-विभागीया

त्रैमासिकी शोध-पत्रिका

# शोध-प्रभा

(A REFEREED QUARTERLY RESEARCH JOURNAL)

३९ वर्षे द्वितीयोऽङ्कः ( अप्रैलमासाङ्कः ) २०१४ ई०

सम्पादकः

**प्रो० रमेशकुमारपाण्डेयः**

कुलपतिः (प्रभारी)

सहसम्पादकः

**डॉ० ज्ञानधरपाठकः**



प्रकाशन-स्थलम्

श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठम्

(मानितविश्वविद्यालयः)

नवदेहली-११००१६

प्रकाशक:
**श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठम्**
(मानित-विश्वविद्यालय:)
कुतुब इन्स्टीट्यूशनल एरिया,
नवदेहली-११००१६



ISSN :- 0974 - 8946

३९ वर्षे द्वितीयोऽङ्क: (अप्रैलमासाङ्क:) २०१४ ई०



मुद्रक:
**अमरप्रिंटिंगप्रैस:**
दिल्ली
amarprintingpress@gmail.com

सम्पादकः

**प्रो० रमेशकुमारपाण्डेयः**

कुलपतिः (प्रभारी)

**सम्पादकमण्डलम्**

प्रो० जयकान्तसिंहशर्मा

प्रो० हरेरामत्रिपाठी

प्रो० भागीरथिनन्दः

**सहसम्पादकः**

डॉ० ज्ञानधरपाठकः

# शोध-प्रभा

## श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठस्य
## अनुसन्धान-प्रकाशन-विभागीया पत्रिका

१. एषा त्रैमासिकी शोध-पत्रिका।

२. अस्याः प्रकाशनं प्रतिवर्षं जनवरी-अप्रैल-जुलाई-अक्टूबरमासेषु भवति।

३. अस्याः प्रधानमुद्देश्यं संस्कृतज्ञेषु स्वोपज्ञानुसन्धान-प्रवृत्तेरुद्बोधनं प्रोत्साहनं विविधदृष्ट्याऽनुसन्धेयविषयाणां प्रकाशनं च विद्यते।

४. अस्यां श्रीलालबहादुरशास्त्री-राष्ट्रियसंस्कृतविद्यापीठस्थानामन्येषां च विदुषां स्वोपज्ञविचारपूर्णा अनुसन्धानप्रधाननिबन्धाः प्रकाश्यन्ते।

५. अप्रकाशितानां दुर्लभानां प्राचीनाचार्यरचितानां लघुग्रन्थानां सम्पादनभावानुवादटीकाटिप्पण्यादि-पुरस्सरं प्रकाशनमप्यस्यां क्रियते।

६. प्रकाशित-निबन्धः पत्रिकायाः एक प्रतिः लेखकाय निःशुल्कं दीयते, यस्मिंस्तदीयो निबन्धः प्रकाशितो भवति।

७. अस्यां पत्रिकायां विशिष्टानां संस्कृत-हिन्द्याङ्ग्ल-ग्रन्थानां समालोचना अपि प्रकाश्यन्ते। आलोच्यग्रन्थस्यालोचना यस्मिन्नङ्के प्रकाशिता भवति सोऽङ्को ग्रन्थकर्त्रे निःशुल्कं दीयते किञ्च समालोचनापत्राण्यपि यथासौविध्यं दीयन्ते।

८. अस्याः वार्षिकसदस्यताराशिः १५०.०० रु० (पञ्चाशदुत्तरैकशतं रूप्यकाणि) सदस्यताराशिः **कुलसचिव, श्रीलालबहादुरशास्त्री-राष्ट्रिय-संस्कृत-विद्यापीठ**, नई दिल्ली-१६, इति सङ्केतेन (बैंकड्राफ्ट अथवा मनीआर्डर) द्वारा प्रेषणीयः।

९. पत्रिकासम्बन्धी सर्वविधः पत्रव्यवहारः 'सम्पादकः' 'शोध-प्रभा', श्रीलालबहादुरशास्त्री राष्ट्रिय-संस्कृतविद्यापीठ, कटवारिया सराय, नई दिल्ली-११००१६ इति सङ्केतेन विधेयः।

**सम्पादकः**

# सम्पादकीयम्

श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठस्य शोधप्रभाख्या शोधपत्रिका विविधविषयगवेषणपूर्णानां निबन्धानां संग्रहं क्रोडीकृत्य विद्योततेतराम्। अनुसन्धानसरणिसम्पन्नानामाचार्याणां शोधार्थिनाञ्च शोधपूर्ण-निबन्धान् कलेवरीकृत्य संस्कृतवाङ्मयपरिपोषणे निमग्नेयम् आनन्दसागरे निमज्जयति विदुषो नितान्तम्।

न केवलं भारतीय-वसुन्धरायामपितु विश्वस्मिन् विश्वे भाषाप्राणप्रदायिनी भारतीयसांस्कृतिक-स्रोतस्विनी, पुरुषार्थचतुर्वर्गफलधारिणी देववाणी भारतस्याखण्डतायाः सूवर्णसूत्रत्वेन विराजतेतराम् तत्र नास्ति संशयलेशोऽपि। सकलमानवतायाः परिपोषकवेदादिविभिन्नदर्शनेतिहासपुराणायुर्वेदसाहित्यशास्त्राणां भण्डारागारत्वेन सुप्रथितयशस्केयं प्रतिजनं प्रापणीयेति सुतरामवधारणीयमस्माभिः। तद्गतज्ञान-विज्ञानयोराधुनिककालोपयोगिताप्रदर्शनपुरस्सरमनुसन्धानकर्म नितान्तमपेक्षते। अस्मिन् विषये बहुविधप्रयत्नाः प्रारभमानाः दृश्यन्ते। भारतीयं शासनमपि विषयेऽस्मिन् नितरां दत्तावधानं दृश्यते। कस्यापि भाषायाः विकासार्थं प्रथमतः तस्याः सम्भाषणमपेक्षते तदर्थञ्च रुचिः परमावश्यकी। रुचिं विना किमपि कार्यं न कोऽपि साधु सम्पादयति। अस्माद्धेतोः आबालवृद्धवनितादिषु संस्कृतं प्रति रुचिमुत्स्रष्टुं तत्र सन्निहितानां ज्ञानविज्ञानमुक्तानां परिप्रकाशनायैव 'संस्कृतसप्ताह' नाम्ना आयोजनं केन्द्रीयमानव-संसाधनविकासमन्त्रालयेन सम्पूर्णे भारतवर्षे विहितम्।

आधुनिकयुगे येन कारणेन मानवजीवनं विपन्नप्रायं प्रतीयते तन्निराकरणार्थं संस्कृतस्याध्ययनम-निवार्यमेव प्रतीयते। तत्त्वदर्शिभिः ऋषिभिः मानवजीवनस्य चतुरस्रं भद्रं विभाव्य वहुविधाः नियमाः विहिताः विविधानि आचारसूत्राणि च निर्दिष्टानि येषां परिपालनेन सर्वतो भावेन सुखं शान्तिश्च समधिगन्तु सुकरमस्ति। एतदर्थं निरन्तरं शास्त्राणामध्ययनानुशीलनादिकं महदिदं कर्तव्यमधुना भारतीयानां सर्वेषां प्रतीयते। अस्यामेव दिशि विद्यापीठस्यास्याः 'शोध-प्रभा'-शोधपत्रिकायाः प्रकाशनं विधीयते।

शोधप्रभायाः अस्मिन्नङ्के विविधविषयविश्लेषपरा द्वादश लेखाः प्रकाश्यन्ते। एवं प्रतिभा-विशेषोद्भासितशोधपूर्णा संस्कृतसौरभं वितन्वतीयं विदुषां सन्तोषाय भविष्यतीति कामयमानोहं प्रमादादज्ञानाद्वा सञ्जातस्य दोषजातस्य प्रशमनार्थं निर्देशादिप्रदानैश्च उत्साहश्रियः संवर्धनार्थमभ्यर्थये सुमनसः विदुषः।

**प्रो. रमेशकुमारपाण्डेयः**

कुलपतिः (प्रभारी)

# विषयानुक्रमणिका

## संस्कृतविभागः



## हिन्दी विभाग



## English Section

# दिक्कालविमर्शः

## ( न्यायवैशेषिकदर्शनमाश्रित्य )

प्रो. हरेरामत्रिपाठी

भारतीयदर्शनस्य मुख्यप्रयोजनं मोक्षस्य प्राप्तिरेव विद्यते। स च पदार्थानां सम्यज्ज्ञानादेव भवति। वैशेषिकनये सप्त पदार्थाः सन्ति द्रव्यगुणकर्मसामान्यविशेषसमवायाभावाः इति। तेष्वन्यतमः पदार्थः द्रव्यमिति। पृथिव्यप्तेजोवाय्वाकाशकालदिगात्ममनांसि इति नव द्रव्याणि भवन्ति। एतेषां नये कार्यद्रव्याणामेवोत्पत्तिर्भवति कार्यद्रव्याणि तु पृथिव्यप्तेजोवायवः (परमाणुभिन्नाः) सन्ति। कार्यद्रव्याणि प्रति नव साधारणकारणानि भवन्ति ईश्वरः, तस्य ज्ञानमिच्छा यत्नश्च दिशा, कालः अधर्मः, धर्मः कार्यस्य प्रागभावः, प्रतिबन्धकाभावश्चेति। तेष्वन्यतमं द्रव्यं दिशा, कालश्च वर्तते। अतीतादि-व्यवहारहेतुत्वमिति कालस्य लक्षणमन्नभट्टेनोक्तम्[1]। इदं कार्यमतीते अभवत्, इदं कार्यमिदानीं भवति, इदं कार्यं परश्वः भविता यद्वा घटोऽतीतः, घटोभविष्यति, घटो वर्तमानश्चेत्याकार यः शब्दप्रयोगः तस्य असाधारणकारण[2]त्वं कालस्य लक्षणमिति गोविन्दाचार्यैरुक्तम्। स च कालः एकः विभुः नित्यश्च वर्तत इति विभुत्वे[3]सति अतीतादिव्यवहारासाधारणनिमित्तहेतुत्वमिति कालस्य लक्षणम्। वर्तमानकालीनध्वंसीयप्रतियोगिताश्रयोपाध्यवच्छिन्नस्य व्यवहारस्य असाधारणकारणत्वमित्यपि कालस्य लक्षणम्। एवं शब्दप्रयोगाधिकरणस्य असाधारणकारणत्वमपि लक्षणं भवति। वर्तमानप्रागभाव-प्रतियोगिव्यवहारस्य असाधारणकारणत्वमपि कालस्य लक्षणं भवति। एकोऽपि कालः उपाधिभेदात् क्षणादिनापि व्यवहारं भजते। उपाधिस्तु स्वजन्यविभागप्रागभावावच्छिन्नं कर्म, पूर्वसंयोगावच्छिन्नविभागो वा, पूर्वसंयोगनाशावच्छिन्नोत्तरसंयोगप्रागभावो वा, उत्तरसंयोगावच्छिन्नं कर्म वा। विश्वनाथपञ्चानन-भट्टाचार्यैरुक्तम्"

> जन्यानां जनकः कालो जगतामाश्रयो[4]मतः।
> परापरत्वधीहेतुः क्षणादिः स्यादुपाधितः॥

---

1. तर्कसंग्रहः पृ. 68, श्रीनिवासोल्लासिनी टीका सहितः चौखम्बा सुरभारतीप्रकाशनक
2. तर्कसंग्रह, पृ. 69
3. तर्कसंग्रह
4. न्यायसिद्धान्तमुक्तावली कारिका 45, 46, पृ. 150

कालिकसम्बन्धावच्छिन्न-कार्यत्वावच्छिन्न कार्यतानिरुपित तादात्म्यसम्बन्धावच्छिन्नाधिकरणत्वावच्छिन्नकारणत्वं कालस्य लक्षणम्। कालिकसम्बन्धावच्छिन्नत्वनिवेशात् दिशि नातिव्याप्तिः अधिकरणत्वाच्छिन्ननिवेशेन अदृष्टादौ नातिव्याप्तिः। कार्यमात्रं प्रति कालः कारणं भवति इत्यत्र किं मानम्? उच्यते तदुत्पत्त्यधिकरणस्य तदुत्पत्तिहेतुत्वं, तदुत्पत्तिहेतोश्च तद्धेतुत्वम् इति नियम एव प्रमाणमस्ति। "अद्य घटो भविष्यति", 'श्वः घटो भविता' इत्यादिज्ञानात् कार्योत्पत्यधिकरणं कालो भवति। अनुमानप्रमाणेन कालस्य सिद्धिर्भवति। अनुमानाकारस्तु इदानीं घटः इत्याकारकसूर्यपरिस्पन्द-प्रकारकघटविशेष्यकप्रतीतिः, परम्परासम्बन्धविषया साक्षात्सम्बन्धाभावे सति विशिष्टबुद्धित्वात् अयं घटः परः, अयमपरः इति ज्ञानस्य असाधारणकारणं काल एव विद्यते। मुक्तावलीकारेणोक्तं—"इदानीं घटः इत्यादिप्रतीतिः सूर्यपरिस्पन्दादिकं यदा विषयीकरोति तदा सूर्यपरिस्पन्दादिना घटादेः सम्बन्धो वाच्यः। स च सम्बन्धः संयोगादिर्न सम्भवति इति काल एव तत्सम्बन्धघटकः कल्प्यते"[5]। अर्थात् एतत्काले मध्याह्नादौ घटोऽस्ति इति ज्ञानम् सूर्यस्य गतिरूपां क्रियां यस्मिन् वर्तमानकालादौ अवगाहते तस्मिन् वर्तमानकालादौ गत्यात्मकक्रियया सह घटपटादिपदार्थानां सम्बन्धः स्वीकार्यः स च न संयोगः, सूर्य क्रियया सह घटस्य संयोगाभावात्। नापि समवायः घटे सूर्यक्रियायाः समवाय एव सम्बन्धः न सम्भवति। स्वरूपसम्बन्धोऽपि न भवितुमर्हति परन्तु स्वाश्रयतपनसंयोगिसंयोगात्मकः परम्परासम्बन्ध एव भवितुमर्हति स्वं = सूर्यक्रियया, तदाश्रयस्तपनः सूर्यः, तस्य संयोगी कालः, तत्संयोगः घटेऽस्ति अत्र परम्परासम्बन्ध घटकः काल एव वर्तते।। कालविषये वैशेषिकसूत्रे चत्वारि सूत्राणि सन्ति।

"अपरस्मिन्नपरं युगपच्चिरं क्षिप्रमिति काललिङ्गानि[6]
द्रव्यत्वनित्यत्वे वायुना व्याख्याते[7]।
"तत्त्वं भावेन[8]"
"नित्येष्वभावादनित्येषु भावात्कारणे कालाख्येति[9]"।।

एतेषु मध्ये प्रथमसूत्रेण अनुमानप्रमाणेन कालस्य सिद्धिः भवति।

अपरस्मिन् अपरं, परस्मिन् परमिति प्रत्ययो यस्मात्भवति स च काल एवं। एव युगपदिति प्रत्ययः, चिरमिति प्रत्ययः, क्षिप्रमिति प्रत्ययश्च काललिङ्गानि सन्ति। बहुतरतपनपरिस्पन्दान्तरितजन्मनि स्थविरे युवानमवधिं कृत्वा परत्वमुत्पद्यते तच्च परत्वमसमवायिकारणसापेक्षमिति। युगपज्जायते, युगपत्तिष्ठति युगपत्कुर्वन्ति इत्यादिज्ञानानां च एकस्मिन् काले एकस्यां सूर्यगतौ एकसूर्यगत्यवच्छिन्ने काले एव तात्पर्यं विद्यते। स्थविरमपेक्ष्य युवाऽपरः, युगपदुत्पद्यन्ते, चिरं जीवति व्यासः, क्षिप्रं गच्छति वायुः

---

5. न्यायसिद्धान्तमुक्तावली, पृ. 151
6. वैशेषिकसूत्रम् अ. 2 आ. 2 सू. 6
7. वैशेषिकसूत्रम् अ. 2 आ. 2 सू. 7
8. वैशेषिकसूत्रम् अ. 2 आ. 2 सू.
9. तदेव सू.

इत्यादीनि कालसाधकानि सन्ति। चन्द्रकान्तभट्टाचार्यैरुक्तम्-"यमपेक्ष्य यस्योत्पत्तिरल्पेन तपनपरिस्पन्देनान्तर्धीयते तमपेक्ष्य सोऽपरः। अपरं चापेक्ष्यान्यः पर इति प्रत्यनीकभावाल्लभ्यते। तत्र यद्द्रव्यं योऽयमपरस्तेन तपनेन च संसृज्यते अपरस्य तपनक्रियया सम्बन्धं करोति तपनपरिस्पन्दांश्च तत्रोपनयति तद् द्रव्यं काल इति[10]"।

द्वितीयसूत्रेण द्रव्यस्य कालस्य नित्यत्वं साध्यते यथा वायुपरमाणुः गुणवत्त्वात् द्रव्यत्वम् अद्रव्यद्रव्यत्वाच्च काले नित्यत्वस्य सिद्धिर्भवति। अत्र विवृत्तिकारो वदति वायुपरमाणोरिव कालस्य अपि गुणाश्रयत्वाद् द्रव्यत्वं, निरवयवत्वात् नित्यत्वमिति"।[11] क्षणलवमुहूर्तयामदिवसाहोरात्र-पक्षमासर्त्वयनसंवत्सरभेदेन कालस्यानेके भेदाः सन्ति तर्हि कथं कालः एक एव इति चेन्न। यथा एक एव स्फटिकमणिः रक्तपुष्पकृष्णपदार्थहरितपदार्थोपरागेण भिन्नरूपेण भासते, तथैव एक एव कालः सूर्यस्पन्दाद्यवच्छेदभेदेन तत्तत्कार्यावच्छेदभेदेन च भिन्न इव भासते। परन्तु यथा सत्तया तत्त्वं तद्व्यक्तित्वमेकं तथैव कालः एक एव विद्यते। चतुर्थसूत्रेण कार्यमात्रं प्रति कालस्य कारणत्वमुक्तम्। नित्येषु परमाण्वादिषु अभावात्तदानीं जात इदानीं जात इत्यादिज्ञानानाम् अभावात् अनित्येषु द्व्यणुकादिषु तदानीं जातः इदानीं जातः इति ज्ञानानां सत्त्वात् कार्यमात्रं प्रति कारणं भवति कालः इत्यस्य सिद्धिर्भवति। यद्यपि कालः एकः तथापि उपाधिभेदात् तत्र भेदो जायते। उपाधेः किं स्वरूपमिति जिज्ञासायामुच्यते विश्वनाथेन उपाधिस्तु स्वजन्यविभागप्रागभावावच्छिन्नं कर्म, पूर्वसंयोगावच्छिन्नविभागः वा, पूर्व संयोगनाशावच्छिन्नोत्तरसंयोगप्रागभावो वा, उत्तरसंयोगावच्छिन्न कर्म वेति।[12]" कालस्य सिद्ध्यर्थमन्येऽपि अनुमानाकाराः सन्ति। कालिकपरत्वापरत्वे असवायिकारणसंयोगजन्ये, भावत्वे सति कार्यत्वात्, घटवदिति। उपाधिभेदात् कालस्य विभागः यथा किरणावलीटीकाकारैः निरुपितः तदित्थं वर्तते। लव-निमेष-काष्ठा-कला-मुहूर्त-दिन-पक्षमासर्त्वयन-संवत्सर-युगादिव्यवहार इति। निमेषो नाम नेत्रपुटयोर्द्रागेव संयोजनवियोगजम्, निमेषः त्रिलवः, त्रिनिमेषाः-कक्षः, त्रिकक्षाः-काष्ठा, त्रिंशत्-काष्ठाः-एका कला, त्रिशंत्कलाः-किं मुहूर्तम्, त्रिंशत्मुहूर्तानि- एकः दिवसः। पञ्चदशदिवसाः-एकः पक्षः द्वौ पक्षौ-एकः मासः, द्वौ मासौ ऋतुः, ऋतवः त्रयः-एकमयनम्, द्वे अयने-एकः सम्बत्सरः अष्टाविंशतिसहस्राधिकसप्तदशलक्षाणि वर्षाणि = एकं सतयुगम्, षण्णवतिसहस्राधिकद्वादशलक्षाणि वर्षाणि = एकं त्रेतायुगम्, चतुःषष्टिसहस्राधिकाऽष्टलक्षाणि वर्षाणि = एकं द्वापरयुगम्, द्वात्रिंशत्सहस्राधिकचतुर्लक्षाणि वर्षाणि = एकं कलियुगम्, चतुर्युगानां वर्षाणां सम्मेलनेन विंशतिसहस्राधिकत्रिचत्वारिंशलक्षाणि वर्षाणि भवन्ति। तादृशचतुर्युगानामेकसप्ततिः = एकं मन्वन्तरम् भवति। एकस्मिन् मन्वन्तरे विंशतिसहस्राधिकसप्तषष्टिलक्षोत्तरत्रिंशतकोटयः भवन्ति। चतुर्दशमन्वन्तरकालः = एककल्पः = ब्रह्मणः एकः दिवसः। दिवसान्ते महर्जनः तपःसत्यलोकान् विहाय स्वर्गादिपातालान्तानां दशलोकानां खण्डप्रलयो भवति सोऽयं नैमित्तिकप्रलयः इति शब्देनोच्यते। नित्यप्रलयस्तु ब्रह्मणो

---

10. चन्द्रकान्तभट्टाचार्य विरचितवैशेषिकभाष्यम्, पृ. 100
11. नित्येष्वभावादनित्येषु भावात्कारणे कालाख्येति वैशे. सू. अ. 2 आ. 2 सू. 9
12. न्यायसिद्धान्तमुक्तावली, पृ. 152

लवनिमेषादिषु प्रलीयतेऽकस्माद्वस्तुजातम्। ब्रह्मण: शतवर्षाणां समाप्तौ अष्टवरणसहितब्रह्माण्डप्रलयो भवति स खण्डप्रलय: प्राकृतिकप्रलयशब्देनोच्यते। सोऽयं काल: महाविष्णोरेकदिवसात्मक: विष्णो: शतवर्षसमाप्त्यनन्तरं सर्वं भावकार्यं सृष्टिमयं प्रलीयते सोऽयमात्यन्तिकप्रलय: महाप्रलय[13]शब्देनोच्यते।

वस्तुत: न्यायवैशेषिकदर्शनयो: महाप्रलये मानाभावात् महाप्रलय: न स्वीक्रियते अपितु खण्ड प्रलय एव स्वीक्रियते इति।

नवीननव्यनैयायिकै: रघुनाथशिरोमणिभि: ईश्वरादतिरिक्तत्वेन कालस्य दिशश्च सत्ता न स्वीक्रियते।

रघुनाथशिरोमणिमतस्य खण्डनं कुर्वन्नाह गोकुलनाथोपाध्याय: "जननिधनादौ कर्माणि भवगत: सहकारिणावपि दिक्कालौ न परमात्मतदात्मानौ, इदानीं प्राच्यां चैत्र: इति प्रतीतिसाक्षिकयो: तयो: ऐकरुप्यासम्भवात्। तथाहि यत्र द्वित्रिक्षणस्थायी पदार्थ इदानीमिति प्रतीतिपथमवतरन् कालोपाधिरितिव्यपदिश[14]यते"।

"दूरान्तिकादिधीहेतुरेका नित्या दिगुच्यते" [15]इति कारिकया दिश: लक्षणं प्रतिपादितं विश्वनाथेन। दुरत्वमन्तिकत्वञ्च दैशिकं परत्वापरत्वे इदं दूरमिदमन्तिकम् इति बुद्धे: असाधारणं निमित्तकारणं दिगेव भवति। दिक्पदजन्यबोधविषयत्वं दिश: लक्षणम्। यद्वा विभुत्वे सति प्राच्यादिव्यवहारस्य असाधारणनिमित्तहेतुत्वं दिश: लक्षणम्। दिग्विशेषणतासम्बन्धावच्छिन्नकार्यता निरूपित तादात्म्यसम्बन्धावच्छिन्नकारणत्वं दिश: लक्षणम्। दिल्लीत: लक्ष्मणपुरापेक्षया कुशीनगरे परत्वं, कुशीनगरापेक्षया च लक्ष्मणपुरे अपरत्वं, तस्य समवायिकारणं कुशीनगरं लक्ष्मणपुरञ्च असमवायिकारणं दिग्लक्ष्मणपुरसंयोग:, दिक्कुशीनगरसंयोगश्च तदाश्रय एकन्तु लक्ष्मणपुरम् कुशीनगरं वा द्वितीयस्तु दिगेव अनुमानाकारस्तु दैशिकपरत्वापरत्वे असमवायिकारणसंयोगजन्ये भावत्वे सति कार्यत्वात् घटवत्। इदं दूरम् इति प्रत्यय: पृथिव्याद्यष्टद्रव्यातिरिक्तद्रव्यसम्बन्धप्रयुक्त: परत्वहेतुकत्वात् कालिकपरत्ववत्। इदमन्तिकप्रत्यय: पृथिव्याद्यष्टद्रव्यातिरिक्तद्रव्यसम्बन्धप्रयुक्त: परत्वहेतुकत्वात् कालिक अपरत्ववत्। अत्र यद्द्रव्यस्य सम्बन्धप्रयुक्त: प्रत्यय: सा दिगिति। द्वयो: दूरान्तिकद्रव्ययो: सम्बन्धस्तु स्वसमवायिसंयुक्तसंयोगाख्य:, स्वं=बहुसंयोगा:, अल्पतरसंयोगाश्च तत्समवायिमूर्तद्रव्यं लक्ष्मणपुरम्, तत्संयुक्तता दिक्, तत्संयोगा: कुशीनगरे वर्तते। सजातीयविजातीयभेदशून्याऽपि एका दिक् उपाधिभेदात् दश दिश: भवन्ति इति। इयं प्राची इयं प्रतीची इयमुदीची इयमवाची चेति प्रतीतय: भवन्ति। यन्मूर्तादुदयगिरिसन्निहितं यन्मूर्तं सा तत: प्राची, प्रागस्यामञ्चति सूर्य इति।

कणादेनोक्तम्- "इत इदमिति यतस्तद्दिश्यं लिङ्गम्[16]"

---

13. श्रीस्वामीनारायणवेदान्तसारे कालप्रकरणत: लब्ध: इति। ब्रह्मण: शतवर्षाणि महाविष्णोरह: स्मृतम्।
14. दिक्कालनिरूपणम् गोकुलनाथोपाध्यायविरचितं दरभंगाविश्वविद्यालयत: प्रकाशितम्
15. न्या.सि. मु. पृ. 154 का. 46
16. वैशेषिकदर्शनम् अ. 2 आ. 2 सू. 10

दिशः इदं दिश्यं तस्यार्थः दिगनुमापकम् इतोऽल्पतरसंयुक्तसंयोगाश्रयादिदं बहुतरसंयुक्तसंयोगाधिकरणं परम् इतश्च संयुक्तसंयोगभूयस्तदधिकरणादिदं संयुक्तसंयोगाल्पीयस्त्वाधिकरणपरमिति नियतदिग्देशयोः समानकालयोः पिण्डयोः यतो द्रव्याद् भवति सा दिगिति। शङ्करमिश्रैरुक्तं, नियतोपाध्युनायकः कालः, अनियतोपाध्युनायिका[17] दिगिति। वैशेषिकसूत्रे दिक्प्रकरणे सप्तसूत्राणि सन्ति। तेष्वन्यतमं सूत्रं पूर्वं व्याख्यायितम्। अन्यानि सूत्राणि सन्ति–

1. "द्रव्यत्वनियत्वे वायुना व्याख्याते।[18]"
2. "तत्त्वं भावेन"[19]
3. "कार्यविशेषेण नानात्वम्[20]"

तथा दक्षिणा प्रतीची उदीची च एतेन दिगन्तरालानि व्याख्यातानि

"आदित्यसंयोगाद्भूतपूर्वादिभविष्यतो भूताच्च प्राची[21]" ''तथा दक्षिण प्रतीची उदाची च''[22] ''एतेन दिगन्तरालानि व्याख्यातानि''[23] यथा वायुनां परमाणवः द्रव्याणि नित्याश्च सन्ति तथैव दिगपि द्रव्यं नित्यं चास्ति। लिङ्गाविशेषाद् विशेषलिङ्गाभावच्च सत्तावद् दिगपि एकैव अस्ति। कार्यविशेषादेव दश दिशः इति व्यवहारो भवति। अर्थात् जन्यमूर्तरूपोपाधिना नानात्वं प्राच्यादिनानाव्यवहारः वस्तुतः एके दिग् वर्तत इति।

प्राक् अस्यां सविता अञ्चति इति प्राची। एवञ्च यस्यां दिशि मेरुप्रदक्षिणक्रमेण भ्रमतः सूर्यस्य प्रथमं संयोगो भूतपूर्वो भविष्यन् भवन् वा सा दिक् प्राची। अञ्चतः सूर्यस्य दक्षिणोऽंशो यया अवच्छिद्यते सा दक्षिणा दिक्, यस्याश्च दिशः प्रातिकूल्येन सूर्यः अञ्चति सा प्रतीची, यस्यां दिशि उर्ध्वम् सूर्यः अञ्चति सा दिग् उदीची। एवं प्राचीदक्षिण्योः दिशोः लक्षणसांकर्येण दक्षिणपूर्वादिक्ज्ञ व्यवहारः एवं दक्षिणपश्चिमां, पश्चिमोत्तरा, उत्तरपूर्वा इति व्यवहारोऽपि बोध्यः। यस्मात् पतति सादूर्ध्वा, यत्र पतति सा दिगधः इति व्यवहारः। वस्तुतः एकैव दिग् भवतीति। काले संख्यापरिमाण–पृथक्त्वसंयोगविभागा इति पञ्च[24] गुणाः समवायेन सन्ति। एकत्वसंख्या, परममहत्परिमाणं, एकपृथक्त्वं, संयोगः, विभागश्चेति सामान्यगुणा एव तत्र सन्ति। जयनारायणभट्टाचार्यशास्त्रार्थसंग्रहे

---

17. वैशेषिकसूत्रोपस्कारः, पृ. 103
18. वैशेषिकदर्शनम् अ. 2 आ. 2 सू.. 11
19. वैशेषिकदर्शनम् अ.2 आ. 2 सू. 1
20. वैशेषिकदर्शनम् अ.2 आ. 2 सू. 13
21. वैशेषिकदर्शनम् अ.2 आ. 2 सू. 14
22. वैशेषिकदर्शनम् अ.2 आ. 2 सू. 14
23. कालखात्मदिशां सर्वगतत्वं परमं महत मु. कारिका 26 संख्यादिपञ्चकं कालदिशोः
24. जयरामभट्टाचार्यप्रणीतशास्त्रार्थसंग्रहः, पृ. 364

उक्तम्–

"कालिकेन जगतामाश्रय[25], एवं जन्यमात्रं प्रति निमित्तकारणं कालः। कालिकापरत्वा-परत्वासमवायिकारणं संयोगानुयोगी च, तादृशसंयोगाधारस्य महाकालस्य सिद्धिर्भवति।" कलनात् सर्वभूतानां स कालः परिकीर्तित इत्याद्यागमस्तु काले प्रमाणमिति। दैशिकपरत्वापरत्वरूपदूरत्वान्तिकत्वासमवायिकारणसंयोगानुयोगितया दिक् सिद्धयति"। दिशः अपि संख्यादिपञ्चकमेव गुणाः सन्ति। तथाचेदं निष्पन्नं भवति कार्यमात्रं कालः दिक् च साधारणकारणे स्तः इत्यत्र विचिकित्सा नास्ति।

25. जयरामभट्टाचार्यप्रणीतशास्त्रार्थसंग्रहः, पृ. 365

# वास्तोरैतिह्यविमर्शः

प्रो. देवीप्रसादत्रिपाठी

वास्तोः वास्तुशास्त्रस्य च कल्पना वैदिककालादेव दृश्यते। यदा मानवाः कुञ्जेषु गह्वरेषु च निवसन्ति स्म तदा भूमौ आवासीयव्यवस्था नासीत्। तस्मिन् कालेऽपि मानवः स्वसुरक्षादृष्ट्या सम्यक् निवासस्थानस्य चयनं करोति स्म। सर्वप्रथमं पृथुना पृथिवीं समीकृत्वा सुव्यवस्थितावासस्य परिकल्पना कृता। अस्यानन्तरं पृथुना ब्रह्माणं प्रत्युक्तम् यत् हे ब्रह्मन्! भवतामादेशेनैव मया पृथिवी निर्माणार्थं समीकृता। अतोऽग्रे तत्र ग्रामनगरादीनां निर्माणार्थं मामादिशन्तु। यथा –

निवासान् कल्पयाञ्चक्रे तत्र तत्र यथार्हतः।
ग्रामान् पुरः पत्तनानि दुर्गाणिविविधानि च॥

घोषान् व्रजान् सशिविरानाकरान् खेटखर्वटान्।
प्राक् पृथोरिह नैतेषां पुरग्रामादिकल्पना॥

यथासुखं वसन्ति स्म तत्र तत्राकुतोभयाः॥[1]

ब्रह्मणा स्वचतुर्भिर्मुखैः विश्वकर्मादीनां रचना कृता। पुराणानामनुसारं ब्रह्मणः पूर्वमुखं विश्वभूः, दक्षिणमुखं विश्वविद्, पश्चिममुखं विश्वस्रष्टा तथा चोत्तरमुखं विश्वस्थ इति कथयन्ति पौराणिकाः। ब्रह्मणः विश्वभूमुखात् विश्वकर्मणः विश्वविन्मुखात् मयस्य विश्वस्रष्टामुखात् मनोः, तथा चोत्तरदिशि-स्थितमुखात् त्वष्टायां उत्पतिः जाता। यथा –

स एवायं विश्वकर्मा ब्रह्माण्डं सृजते मुहुः।
पूर्वोक्तवक्त्रचत्वारि वक्ष्येऽहन्तु पृथक्-पृथक्॥

विश्वभूरितिनामैतत्पर्वूवक्त्रं प्रकीर्तितम्।
दक्षिणे विश्वविद्वक्त्रं विश्वस्थं च तथोत्तरे॥

पश्चिमेविश्वस्रष्टाख्यं वक्त्रमेव चतुर्विधम्।
एतेभ्यः प्रथमंजातं विश्वकर्मचतुष्टयम्॥

---

1. वास्तुसारसंग्रह प्राक्कथनम् पृ.-5

**पूर्वाननेविश्वकर्मा जायते दक्षिणे मयः।**
**उत्तरस्य मुखे त्वष्टा पश्चिमे तु मनुः स्मृतः।।**[2]

ब्रह्मा स्वपुत्रान् प्रति कथयति यत् भवन्तः पृथिव्यां गत्वा पृथोरभिलाषानुसारं तत्र नगर-ग्राम-पुरादीनां पृथक् पृथक् रचनां कुर्वन्तु। विश्वकर्मणा जगत्स्रष्टारं ब्रह्माणं प्रति कथितं यदहं तत्र गत्वा स्वबुद्ध्याा सुरासुरोरगनागाणां कृते तथा च सह एव पृथोः मनुष्याणाञ्च कृते निवासाय सुन्दरपुरीनगरग्रामादीनां निर्माणं करिष्यामि। यथोक्तम् -

**गत्वोर्विर्वैन्यनृपतेः प्रियं तव करिष्यति।**
**नगर-ग्राम-खेटादीन् करिष्यति च पृथक् पृथक्।।**

**स्वयंकरिष्येऽहमथो निवासाय पृथोः पुरीम्।**
**विचित्र - नगर - ग्राम - खेटामतिमनोहराम्।।**[3]

विश्वकर्मा चिन्तयति यत् ब्रह्मणराज्ञानुपालने केषाञ्चन दक्षशिल्पीनामावश्यकता भविष्यति। एतदर्थं तैः सर्वैः विश्वकर्मादिभिः एकैकः पुत्रः उत्पादितः। विश्वकर्मणः स्थपतेः मयात् सूत्रग्राह्याः मनोः तक्षकस्य त्वर्ष्टुः च बार्द्धिकेरुत्पतिः जाता। सर्वविदितमस्ति यत् कस्यापि निर्माणाय विभिन्नानां शिल्पीनामावश्यकता भवति। यथा- पाषाणविशेषज्ञस्य काष्ठविशेषज्ञस्य, धातुविशेषज्ञस्य निर्माणविशेषज्ञस्य च। एतेषां सर्वेषां विशेषज्ञानां संयुक्तप्रयासैरेव किमपि निर्माणकार्यं पूर्णं भवितु शक्यते। प्राचीनवास्तुशास्त्रे स्थयतेः सूत्रग्राह्याः बार्धिकेः तक्षकस्य च कार्याणि निर्धारितानि सन्ति। यथा -

**1. स्थपतिः** - सर्वेषां वेदशास्त्राणां ज्ञाता भवति। समस्त निर्माणकार्येषु पारङ्गतो भवति। स्थपतेराज्ञया एव सूत्रग्राह्यादयः कार्याणि कुर्वन्ति।

**2. सूत्रग्राही** - केष्वपि योजनाकार्येषु कुशलो भवति। रेखाचित्रं मानचित्रं वा इत्यस्य निर्माणे कुशलो भवति।

**3. बार्धकिः** - केष्वपि योजनाकार्येषु निपुणः वेदज्ञः चित्रकलाविशेषज्ञश्च भवति।

**4. तक्षकः** - सर्वेषु निर्माणकार्येषु दक्षः कुशलकर्मिभिः युक्तः धीरः सर्वेषां शिल्पीनां गुरुः भवति।

एतेषां सर्वेषां सहयोगेन एव गृह-ग्राम-नगरादीनां सर्वेषां निर्माणं भवति। येषु कोऽपि एकः सर्वं निर्माणकार्यं पूर्णं कर्तुं शक्नोति यतो हि एते सर्वे सर्वगुणसम्पन्नाः भवन्ति। यथोक्तम् -

**विश्वकर्मणः पुत्रः स्यात् स्थपतिश्चैव स स्मृतः।**
**मयस्य तनयः सूत्रग्राहीति परिकीर्तितः।।**

---

2. वास्तुसारसंग्रह प्राक्कथनम् पृ.-8
3. वास्तुसारसंग्रह प्राक्कथनम् पृ.-6

त्वष्टुर्देवऋषेः पुत्रो वार्धकिरिति विश्रुतः।
मनोः पुत्रस्तक्षकः स्यात्स्थपत्यादिचतुष्टयम्॥

स्थपति:सर्वशास्त्रज्ञो वेदविच्छास्त्रपारगः।
स्थापयत्याधिपतिर्यस्मात् तस्मात् स्थपतिरुच्यते॥

स्थपतेराज्ञयासर्वे सूत्रग्राह्यादयः सदा।
कुर्वन्ति शास्त्रादेशेन वास्तुवस्तु प्रयत्नतः॥

आचार्यलक्षणैर्युक्तः स्थपतिः स्यादिति विश्रुतः।
श्रुतज्ञ सूत्रग्राही च रेखाज्ञः शास्त्रवित्तमः॥

विचारज्ञः श्रुतिज्ञश्च चित्रकर्मज्ञवार्धकिः।
तक्षकः कर्मवित्सभ्यः सबान्धवदयापरः॥

इहैव लोकस्य यत्कर्म सर्वं तच्छिल्पिनां गुरुः।
न लभ्यते तु यत्तस्मादेभ्यः सर्वं प्रसाधयेत्॥[4]

उपर्युक्तचतुर्णां शिल्पीनामेकत्रोपलब्ध्यभावे सत्येकेनापि सर्वं निर्माणकार्यं साधयेद्धीमानिति। एते सर्वे सर्वेषां ज्ञानेनापूरिता भवन्ति। अत एव सर्वे पृथक् पृथगपि सर्वं निर्माणकार्यं पूरयितुं समर्था भवन्ति। येषु सर्वेषु स्थपतिः सर्वज्ञो भवति शेषान् सर्वानादिशति। अतः स्थपतिः सर्वेषां गुरुः सिद्ध्यति। द्वितीयः सूत्रग्राही शेषद्वयस्य गुरुः निदेशकश्च तथा च बार्धकिः तक्षकस्य आदेशकः गुरुर्वेति। यथोक्तम् –

स्थपतिस्तु स्वतुर्येभ्यस्त्रिभ्यो गुरुरिति विश्रुतः।
सूत्रग्राही गुरुर्द्वाभ्यां तुर्येभ्योऽथ प्रकीर्तित॥

तक्षकस्य गुरुर्नाम्ना वार्धकिरिति विश्रुतः॥

येषु सर्वेषु तक्षकस्य विशिष्टं स्थानं वर्तते। तक्षकः काष्ठविशेषज्ञः वनात्काष्ठाहरणविधिना काष्ठं गृहीत्वा तं काष्ठं निर्वल्कलं कृत्वा मासत्रयं जले निक्षिप्य पश्चाज्जलान्निःसारयति। अनेन काष्ठस्य जीवनं दीर्घकालिकं काष्ठं कीटच्छिन्नप्रभृतिदोषनिर्मुक्तञ्च भवति। ततश्चतुरस्रविदारणेन काष्ठं सर्वोपयोगी भवतीति।

अनेन सुव्यवस्थितविधिना सह पृथोः मनोनुकूलं पृथिव्यां ग्राम–नगर–पुरादीनां निर्माणं विश्वकर्मणा सम्पादितम्। इत एव वास्तुशास्त्रस्योद्भवोऽभवत्। आरम्भकालादेव वास्तुशास्त्रे वास्तुपुरुषस्यावधारणा मिलति। वैदिककाले वास्तुपुरुषस्यावधारणा वास्तोस्पतिदेवविशेषस्य रूपे मिलति यस्याराधना यज्ञे

4. वास्तुसारसंग्रह प्राक्कथनम् पृ.–9

गृहशान्त्यर्थं भवति। पौराणिककाले वास्तोस्पतेः द्वौ रूपौ मिलतः प्रथमः वास्तुपुरुषरूपे द्वितीयः वास्तुचक्ररूपे वास्तुचक्रे पञ्चचत्वारिंशत्देवाः सन्ति। ये वास्तुशान्तिकर्मणि पूज्यन्ते। पुराणेषु वास्तुपुरुषस्य सन्दर्भे एका कथा प्रचलिताऽस्तीति। यथा -

एकदा भगवानशिवान्धकयोर्मध्ये घनघोरयुद्धमभवत्। युद्धे भगवतः शिवस्य शिरसः श्वेदबिन्दुः भूमौ अपतत्। तस्मादेकः विशालकायः पुरुष उत्पन्नोऽभवत्। तेन झटिति अन्धकासुराणां बधं कृत्वा स्वनिवासाय स्थानस्य याचना कृता। प्रसन्नो भूत्वा भगवता शिवेन तस्य कृते आवासयोग्यभूमौ निवासस्यादेशः कृतः। तदन्तरं भयेनाक्रान्तैःसर्वैः देवैः तं गृहीत्वा भूमौ अधोमुखं निविश्य यत्र येन गृहीतमासीत् तत्रैव स्थितो भूत्वा तस्य प्रतिष्ठा वास्तुपुरुषरूपे कृता। यथोक्तम्-

**संग्रामेऽन्धकरुद्रयोश्च पतितःस्वेदो महेशात् क्षितौ,**
**तस्माद्भूतमभूच्च भीतिजननं द्यावा पृथिव्योर्महत्।**
**तद्देवैः सहसा निगृह्य निहितं भूमावधो वक्त्रकं**
**देवानां वचनाच्च वास्तुपुरुषस्तेनैव पूज्यो बुधैः।।**[5]

भवन-पुर-ग्राम-तडाग-वापी-वन-उद्यान-यज्ञमण्डपादिनिर्माणे तथा च जीर्णोद्धारेऽस्यैव वास्तुपुरुषस्य सर्वत्र पूजनं भवति। अस्य पूजनं विना गृहे सुखशान्तिः नागच्छति। यथोक्तम् -

**प्रासादे भवने तडागखनने कूपे च वाप्यां वने,**
**जीर्णोद्धारेपुरे च यागभवने प्रारम्भनिर्वर्तने।**
**वास्तोः पूजनकं सुखाय कथितं पूजा विना हानये।।**[6]

इदमस्ति वास्तुशास्त्रस्य कथानकं स्वरूपम्। यावत्कालपुरातना मानवसभ्यताऽस्ति तावदेव वास्तुविद्याऽप्यवलोक्यते। वास्तोः मूलभूतत्त्वानि वेदेषु वेदाङ्गेषु पुराणेषु आगमग्रन्थेषु च दरीदृश्यन्ते। अस्य वास्तुशास्त्रस्य ज्योतिषकल्पाभ्यां सह घनिष्ठसम्बन्धो वर्तते। शुल्बसूत्रेषु यज्ञवेदीनां परिकल्पनाऽस्य शास्त्रस्याधारशिलाऽस्ति। वास्तुशब्दस्यार्थ 'वस् निवासे' धातुना निवासयोग्यं भूखण्डं गृहं वा भवति।[7] वेदेषु वास्तुपदस्यार्थः निवासः गृहं वा भवति।[8] वैदिकसाहित्ये सुवास्तु शब्दः शोभनगृहस्य कृते तथा अवास्तुशब्दः गृहाभावस्य कृते प्रयुज्यते।[9] यजुर्वेदीयसंहितासु वास्तुशब्दस्यार्थः यज्ञवास्तुः भवति।[10]

---

5. राजलबल्लभमकनम् - 2.1
6. राजलबल्लभमकनम् - 2.2
7. वाचस्पत्यम् भाग 6, पृ.-4888
8. ऋग्वेद-8.19.36
9. अथर्ववेद 12.7.7
10. मैत्रायणी संहिता-1.5.113, तैत्तिरीय संहिता-3.1.10.3

सूत्रग्रन्थेषु वास्तोरर्थः सामान्यतया आवास एव विद्यते[11] परन्तु कौशिकगृह्यसूत्रे वास्तुशब्दः मृतकानां संस्कारस्थलस्य बोधकोऽप्यमस्ति।[12] रामायणे[13] महाभारते[14] च वास्तुशब्दः भवननिर्माणस्य बोधकोऽस्ति। पुराणेषु विशेषतयामत्स्यपुराणे देवानां निवासोऽर्थात् मन्दिरमेव वास्तुसंज्ञया व्यवह्रियते। यथा-**निवासात् सर्वदेवानां वास्तुरित्यभिधीयते।**[15] कौटिल्यस्यार्थशास्त्रे वास्तुशब्दः गृह-क्षेत्र-आराम-सेतु बन्ध-तडागादयः तथा चैतेषामाधारभूमिः भवति।[16] अस्य शब्दस्यार्थः कामिकातन्त्रे।[17] विमानप्रासादादिभवनानि, अपराजितपृच्छायां ग्रामनगरादयः[18] मयमते भूमिः[19] मानसारे देवमनुष्याणां भवनानि भूमिश्च भवति।[20] ऋग्वेदे गृहस्यार्थे वास्तु-शरण-शर्म-क्षय-वरुथ्य-सदन-दुरोणमित्यादीनां प्रयोगः प्राप्यते।[21] यजुर्वेदे वास्तोः प्रयोगः प्रायः यज्ञार्थे मिलति। यथा-यूपनिर्माणम्, स्तूपनिर्माणम्, आसन्दीपर्यङ्कादीनाञ्च निर्माणम्।[22] अथर्ववेदस्य शालासूक्तेषु भवननिर्माणवर्णनं स्पष्टतयादृश्यते।[23] शतपथब्राह्मणे यज्ञादीनां प्रसङ्गे चितिवर्णनमिष्टिकानिर्माणं तथा चेष्टिकानां प्रकारप्रमाणादीनां वर्णनमपि विस्तृतरूपेणोपलभ्यते।[24] श्रोतशुल्बगृह्यसूत्रेषु वास्तुशब्दस्य प्रयोगः सर्वाधिकरूपेण प्राप्यते। यज्ञवेदीनां निर्माणे शुल्वसूत्राणां विशिष्टं स्थानं विद्यते। शुल्बशब्दस्यार्थः मापनकर्मणि प्रयुवतसूत्रं रज्जुः वा भवति। वेदीनिर्माणे आकृतिमापनम् इष्टिकामापनमित्यादीनि सर्वाणि मापनकार्याणि शुल्बेन (रज्जुना) सिध्यन्ति। यज्ञवेदीनिर्माणकर्मणि बौधायन-आपस्तम्ब-कात्यायनशुल्बसूत्राणां योगदानं महत्वपूर्णमस्ति। शांखायन-पारस्कर-आश्वालयनगृह्यसूत्रेषु भूमिचयनं भूशोधनं भूमिपूजनम् इत्यादीनां विषयाणां वर्णनं मिलति।[25]

---

11. आपस्तम्बश्रौत्रसूत्र-6.28.6, पारस्करगृह्यसूत्र-3.48
12. कौशिकागृह्यसूत्रम् पृ.-2.13
13. बाल्मीकिरामायण-1.23,33,56
14. महाभारत-2.18
15. मत्स्यपुराण-251.14
16. अर्थशास्त्रम्-3.8.2
17. कालिकागम-208-210
18. अपराजितपृच्छा-2.17
19. मयमतम्-2.1
20. मनसारः -2.2-3
21. ऋग्वेदः 2.3.8, 1.154.6, 6.16.33, 1.121.2, 4.53.6, 8.101.5
22. तैत्तिरीय संहिता 1.3.6.3, वाजसनेयी संहिता 35, 19.86., 20.01
23. अथर्ववेदः-3.12, 9.3
24. शतपथब्राह्मणः-7.1.20, 8.1-5, 6.1.22, 23, 29
25. शांख्यायन 3.4.5, 1, 2, पारस्कर 3.4, आश्वालयन 2.9.10

**वेदेषु वास्तुविद्देवगणाः -**

**प्रजापतिः**-सम्पूर्णेयं सृष्टिः स्थापत्यस्याद्भुतं निदर्शनमस्ति। सृष्टिप्रक्रियायां सर्वे देवाः सहायकाः भवन्ति। ऋग्वेदस्य हिरण्यगर्भसूक्तस्यानुसारं[26] क संज्ञकः प्रजापतिः प्रथमः वास्तु देवोऽस्ति। येन द्यु-अन्तरिक्ष-पृथिवीनां रचना कृता।[27] स्वयंभूपरमेश्वरः सर्वप्रथमं विश्वोत्पत्तये प्रजापतिमसृजत्। श्रुतिषु प्रजापतिरेव हिरण्यगर्भः। यथा-**हिरण्यगर्भः समवर्तताग्रे भूतस्य जातः पतिरेक आसीत्।**[28] ऋग्वेदस्य नासदीयसूक्ते वर्णनं मिलति यत् सृष्टेरादौ न **'सत्'** आसीत् न **'असत्'** आसीत् न आकाशमासीत् न वायुमण्डलनासीत् न दिवसमासीत् न रात्रिरासीत् केवलं ब्रह्मण एव सत्ता आसीत्। ब्रह्मणः सद्गल्पमात्रेण सृष्टिरभूत्। संकल्प एव ज्वाजल्यमानतप आसीत्।[29]

**विश्वकर्मा**- विश्वकर्त्ता विश्वकर्मा वाजसनेयिसंहितानुसारं प्रजापतिना सम्बद्धोऽस्ति। निरुक्तकारः यास्कः विश्वकर्माणं विश्वकर्मा भौवनः तथा च सर्वस्य कर्त्ता कथयति।[30] शौनकैः विश्वकर्मणः अर्थः **'विश्वस्य कर्म जनयन् स विश्वकर्मा'** इति क्रियते। ऋग्वेदे परमेश्वर एव स्रष्टा, परमेश्वरस्य गुणानां संज्ञा एव देवताः ब्रह्माण्डस्य सृजनं देवा एव कुर्वन्ति। ते देवाः सन्ति विश्वकर्मा, विष्णुः सविता त्वष्टा, इन्द्र वरूणादयः। एते देवाः सृष्टिनिर्माणे विभिन्नानि कार्याणि कुर्वन्ति तदैव भवति पूर्णं ब्रह्माण्डनिर्माणकार्यम्। तैः सृजने यस्य पदार्थस्योपयोगः कृतः स आसीद् अन्तरिक्षधूलिः (कास्मिकडस्ट) मेघसदृशः कश्चन पदार्थः। अस्य सृष्टेः धारकः परमेश्वरपरब्रह्म एवास्ति स एव जानात्यस्य रहस्यम्। यथा-

**इयं विसृष्टिर्यत आवभूव यदि वा दधे यदि वा न।**
**यो अस्याध्यक्षः परमे व्योमन् त्सो अङ्ग वेद यदि वा न वेद।।**[31]

**त्वष्टा**- वैदिकसाहित्येऽस्य देवस्य वर्णनं तक्षणकर्मणा वस्तूनां रूपनिर्माणे आगच्छीति। यास्कस्यानुसारं त्वष्टा शब्दः त्विष्, त्वक्ष धातुभ्यां निष्पन्नो भवति।[32] शौनकोऽपि यास्कस्य मतस्य पुष्टिं करोति।[33] तक्षणकार्यकुशलः त्वष्टा मानवपशूनां कृते आवश्यकवस्तूनां निर्माणं करोति।[34] वास्तुशिल्पज्ञानां वाहन-आयुध-धेनुदिव्यत्रिबन्धुर-रथ-हरिसंज्ञकाश्वाः प्रसिद्धरचनाः सन्ति।[35] त्वष्टा

---

26. हिरण्यगर्भसूक्तम्-10.121
27. यजुर्वेद संहिता 13.4, 40.8, ऋ.सं.-10.121.1, 1.121.1, 7
28. ऋग्वेद संहिता - 10.129.03
29. निरुक्त 10.26, 10.25
30. वृहद्देवता-2.50
31. ऋग्वेद- 10/129/7
32. निरुक्त-8/13
33. वृहद्देवता-3.16
34. ऋग्वेद-1.188.09
35. वृहददेवता-3.85.87
36. ऋग्वेद-1.32.2, 10.5.9

अग्निकला प्रदर्शने वज्रलोहकुठाराणाञ्च तीक्ष्णीकरणे अपि कुशल आसीत्।[36] अनेन सिद्ध्याति यत् त्वष्टा देवानां निष्णात शिल्पी आसीत्।[37]

**ऋभुदेवगणाः**-हस्तकलाकुशलाः ऋभुगणाः सुधन्वांगिरः पुत्राः त्वष्टु त्वष्टकर्मकुशलशिष्या सन्ति। एतैः रथः रथस्य चक्रम् चक्रधारा वल्गा (लगाम)[38] मातुः निधनकारणेन कृशरूपाय गोवत्साय त्वचा मातृरूपायाः धेनोः निर्माणं कृतम्। अनेनैव स्ववृद्धमातापितृभ्यां पुनर्यौवनंप्रदत्तम्।[39]

**वास्तोष्पति**-अस्य देवस्य वास्तुशिल्पकार्यनिर्माणे किमपि योगदानं नावलोक्यते परन्तु गृहस्य रक्षणे पालने चास्य भूमिका सर्वोपरि दृश्यते।[40] यथोक्तम् -

**वास्तोष्पते प्रतिजानीह्यस्मान्त्स्वावेशो अनमीवो भवा नः।**
**यत् त्वेमहेप्रति तन्नो जुषस्व शं नो भव द्विपदे शं चतुष्पदे॥[41]**

रामायणे महाभारते च वास्तो वर्णनं बहुषु स्थलेषु दरीदृश्यते। अनयोः द्वयोः ग्रन्थयोः नागरद्रविणपरम्पराया अनेकानि उदाहरणानि उपलभ्यते। रामायणे विविधपुरीनां चर्चा उपलभ्यते।[42] किष्किन्धाकाण्डे वर्णितायाः विचित्रगुहायाः वर्णनं मयस्य शिल्पकौशलस्य अद्वितीयमुदाहरणमस्ति।[43] रामायणे वास्तुशिल्पशास्त्रस्य अनेकानि उदाहरणानि दृश्यन्ते। यथा- पुष्पकविमानम्[44] सेतुबन्धम् इत्यादयः। अनेन महाभारतेऽपि वास्तुशास्त्रस्य अप्रतिमानि उदाहरणानि मिलन्ति। यथा- इन्द्रप्रस्थपुरी[45], द्वारकापुरी[46], मिथिलापुरी[47], विभिन्नसभाभवनानि[48], लाक्षागृहम्[49] इत्यादयः। पुराणेषु वास्तुशास्त्रस्य वर्णनं मुख्यरूपेण मत्स्य[50]-अग्नि[51]-स्कन्द[52]-गरुड़[53]-विष्णुधर्मोत्तरेषु[54] मिलति।

---

37. वृहद्देवता-3.84
38. ऋग्वेद-1.180.1, 8.5.25
39. ऋग्वेद-1.110.8, 1.11.1
40. निरुक्त-10.17
41. ऋग्वेद-7.54.01
42. बाल्मीकि रामायणे अधोध्यापुरी-1.5.5-23, किष्किन्धाका.-33.4.17
43. लङ्काका.-3.2-21, 4.4.30
44. सुन्दरकाण्डे-9.11
45. महाभारत-1.207.30-48
46. महाभारत-3.15.5-18
47. महाभारत-3.207.7-11
48. महाभारत-2.1.4-5, 47
49. महाभारत- 1.144, 8.11
50. मत्स्यपुराण अ.-252-360
51. अग्निपुराण अ.-105, 247
52. स्कन्दपुराण माहेश्वर खण्ड
53. गरुडपुराण अ.-43-49
54. विष्णुधर्मोत्तर-3.86-87

**वास्तुविद् पौराणिकदेवता -**

वैदिकदेवपरिवारस्योपयुक्ता: वर्णिता: देवा: वास्तुकर्मणा सम्बद्धास्तु सन्ति परन्तु तेषां तत्र वास्तुविद्यया सह साक्षात्सम्बन्धस्योल्लेख: नावलोक्यते। पुराणेषु देवाधिदेवानां ब्रह्मा-विष्णु-महेशानां साक्षात्सम्बन्ध: वास्तुशास्त्रेण सहास्तीति प्रतिभाति। सृष्टे: मूलकारणं परब्रह्म एव, य: पुराणेषु विष्णु-ब्रह्म-शिवाख्या: वर्णिता:। इमे देवा: क्रमेण जगत: संचालनं कुर्वन्ति।

**ब्रह्मा -**

सृष्टिकर्त्तारं ब्रह्माणं विद्वद्भि: स्थापत्यस्य वास्तुशास्त्रस्य वा प्रोक्तार: कथ्यन्ते।[55] मानसारानुसारं ब्रह्मण: चत्वारि मुखानि सन्ति। तेभ्य: क्रमश: विश्वकर्मण: मयस्य त्वष्टु: मनोश्चोत्पत्ति: जाता।[56] नारद-भृगु-पुलस्त्य-अत्रि-वशिष्ठादय: ब्रह्मण: मानसपुत्रा: एतेऽपि वास्तुशास्त्रस्य ज्ञातार: सन्ति।[57]

**विष्णु: -**

भगवत: विष्णो: मत्स्यावतारेण मनवे वास्तुशास्त्रस्योपदेश: कृत:।[58] भगवता विष्णुना एव विश्वकर्माणं चित्रशास्त्रस्य ज्ञानं प्रदत्तम्।[59] भगवत: विष्णो: वराहविग्रहेणैव वास्तुसन्दर्भे पद्मेनिमनाया: भूमेरुद्धार: कृत:। तदैव भूमौ ग्रामनगरादीनां निर्माणं जातम्।[60]

**शिव: -**

सर्वेषां ज्ञानराशीनां मूलस्रोतांसि शिव एव।[61] भगवान् शिव: दक्षिणामूर्त्तिविग्रहेण भक्तानाङ्कृते ज्ञानं प्रददति। एष एव मूलरूपेण वास्तुशास्त्रस्योपदेष्टा अस्ति। यतो हि वास्तुमण्डलस्याधिदेवस्यवास्तुपुरुषस्य जन्म शिवस्य स्वेदविन्दोरभवत्।[62]

**वास्तुशास्त्रस्याचार्या: -**

वास्तुशास्त्रस्य प्रवर्तकाचार्याणामुल्लेख: पुराणेषु वास्तुग्रन्थेषु शुल्वग्रन्थेषु चोपलभ्यते। मत्स्यपुराणे वास्तुशास्त्रस्य अष्टादशोपदेशकाचार्याणां वर्णनं मिलति। यथा-भुगु: अत्रि: वशिष्ठ: विश्वकर्मा मय:

---

55. भागवतपुराण-3.12.38
56. मनसार-1.2
57. मत्स्यपुराण 252.2-4
58. विष्णुधर्मोत्तर पुराण-3.35.5
59. वराहपुराण-112.1
60. मत्स्यपुराण 68.41
61. मनसार:-1.2
62. मत्स्यपुराण-5.30

नारदः नग्नजित् विशालाक्षः पुरन्दरः ब्रह्माकुमारः नदीशः शौनकः गर्गः वासुदेवः अनिरुद्धः शुक्रः वृहस्पतिश्च।

**भुगुरत्रिर्वशिष्ठश्च विश्वकर्मामयस्तथा।**
**नरदो नग्नजिच्चेव विशालक्षःपुरन्दरः।।**
**ब्रह्मा कुमारो नन्दीशः शौनको गर्ग एव च।**
**वासुदेवोऽनिरुद्धश्च तथा शुक्रबृहस्पती।**
**अष्टादशैते विख्याताः वास्तुशास्त्रोपदेशकाः।**
**संक्षेपेणोपदिष्टं यन्मनवे मत्स्यरूपिणः।।**[63]

अग्निपुराणे पञ्चविंशति आचार्याणामुल्लेखो निलति।[64] उतथ्यपुत्रः आचार्यगर्गः ज्योतिष्शास्त्रस्याचार्य आसीत्। तेन शेषनागात् ज्योतिर्विद्यायारध्ययनं कृतम्।[65] अतः ते वास्तुशास्त्रस्याचार्या अप्यासन्। अग्निपुराणे उल्लिखितं वर्तते यदेतेषां गार्ग्यतन्त्रनामकः ग्रन्थ आसीत्।[66] महर्षिनारदस्य नारदीयतन्त्रम् नारदसंहिता नारदीयपाञ्चरात्रम् नारदवास्तुविधानञ्चेत्यादयो ग्रन्थाः मिलन्ति येषु सर्वेषु ग्रन्थेषु वास्तुविषयकं वर्णनमुपलभ्यते।[67] ब्रह्मणः मानसपुत्रस्यात्रेराश्रेयतन्त्रम्[68] अत्रिसंहिता अत्रिस्मृतिः[69]शुक्राचार्यस्य शुक्रनीतिः वृहस्पतेः बृहस्पतिस्मृतिः बार्हस्पत्यशास्त्रञ्च।[70] येषु ग्रन्थेषु एतेषामाचार्याणां वास्तुविषयकविचारा उपलभ्यन्ते। नग्नजिताचार्यस्य चित्रलक्षणनामकः ग्रन्थः प्रसिद्धोऽस्ति। अयमाचार्यः चित्रकर्मणि कुशलः आसीत्।

**वास्तोरन्याचार्याः -**

बाल्मीकिरामायणस्य युद्धकाण्डे वास्तुविदोः नलनीलयोः वर्णनं मिलति। नलः कृताच्याः गर्भादुत्पन्नः विश्वकर्मणः पुत्र आसीत्।[71] नलोऽपि विश्वकर्मणा सदृशः, वास्तुकर्मणि कुशल आसीत्।[72] एतैः एव समुद्रोपरि दशयोजनदैर्घ्यसेतोः निर्माणो विधेयः।[73] विश्वकर्मणः द्वितीयवानरपुत्रः नीलोऽपि

---

63. मत्स्यपुराण - 252.2-4
64. अग्निपुराण-39.1-5
65. प्राचीन चरित्रकोश पृ.-588-585
66. मत्स्यपुराण-252.3
67. अग्निपुराण-39.1-5
68. अग्निपुराण-39.1-5
69. प्राचीन चरितकोष पृ.-16
70. तत्रैव पृ.-776
71. वाल्मीकि रामायण युद्धकाण्ड-22.45
72. वामनपु0-62, मानसार-68.1-2
73. वाल्मीकि रामायण युद्धकाण्ड-22.52

नलस्य सहायक आसीत्।[74] महाभारते वर्णनं मिलति यत् वास्तुविद् पुरोचनः लाक्षागृहस्य कर्त्ता आसीत्। तस्य लाक्षागृहे दहनेन मृत्युरभवत्।[75] मानसारे वास्तुशास्त्रस्य बहूनामाचार्याणां वर्णनं मिलति। यथा- विश्वकर्मा विश्वेशः विश्वेश्वरः प्रबोधकः वृतः मयः त्वष्टाः मनुः नल मानवित् मानकल्पः मानसारः प्रष्टा मानबोधः विश्वबोधः नयः आदिसारः, विशालः विश्वकाश्यपः वासुबोधः महातन्त्रम् वास्तुविद्यापतिः पाराशरीयकः कालयूपः चैत्यः चित्रकः आवर्धः भानुः साधकसारः इन्द्रः लोकज्ञः सूर्यश्च।[76] वराहमिहिरेण वृहत्संहितायां स्थाने-स्थाने प्रसङ्गानुसारं गर्ग-मनुवशिष्ट-पराशर-विश्वकर्मा-नग्नजित्-मयादीनां वर्णनं कृतम्।[77] वास्तुकौस्तुभग्रन्थे शौनक-राम-रावण-परशुराम-हरि-गालव-गौतम-शोभित-वैद्याचार्य-मयपुत्र-कार्तिकेय-च्यवनानामुल्लेखो मिलति।[78] विश्वकर्माप्रकाशे गर्गः पराशरः बृहद्रथश्च वास्तु प्रवर्तकाचार्याः सन्ति।[79] ऋषेः कश्यपस्य काश्यपशिल्पः ऋषेरगस्त्यस्य सकलाधिकारः तथा चर्षेः मरीचेः वैखानसागमः प्रसिद्धाः ग्रन्थाः सन्ति।[80] येषु सर्वेषु ग्रन्थेषु वास्तुशिल्पशास्त्रयोः प्रतिपादनं कृतमाचार्यैः। वास्तुविदां प्रसङ्गे विश्वकर्मामयौ अग्रगण्यौ स्तः।

**विश्वकर्मा -**

देवशिल्पी विश्वकर्मा वास्तुशास्त्रे नागरपरम्परायाः प्रवर्त्तकोऽस्ति। एतेषाङ्कृते वास्तुशिल्पयोः ज्ञानं ब्रह्मणः प्राप्तम्।[81] वैदिकसहिताब्राह्मणग्रन्थयोः वर्णितसृष्टिकार्ये प्रवृत्तः देवः विश्वकर्मा दृश्यते। एते एव ब्रह्मणा मानसीसृष्टिं रूपं प्रददति। शिल्पशास्त्रे एतेषाङ्कृते विष्णोरवतारभूता मन्यन्ते जनाः। शिल्पशास्त्रे वर्णनं प्राप्यते यत् विश्वकर्माणः चतुषष्टिकलानामधिपतयः ऐरावतगजे आरूढाः प्रसन्नवदनाः आभूषणैराभूषिताः चतुर्भुजाकाराः शान्तरूपा पीतवसनावृताः हस्योश्च मानसूत्राधारिता स्तूयमाना सन्ति।[82] विश्वकर्मणः जन्मनः विषये वास्तुग्रन्थेषु विविधविचाराः उपलभ्यते। धर्मस्य दशभार्यासु एका दक्षस्य पुत्री आसीत् यस्याअष्टवसूनां जन्म अभवत्। येषु सर्वेषु वसुषु कनिष्ठः प्रभासवसुः विश्वकर्मणः जनक आसीत्। प्रभासवसोः पुत्रः विश्वकर्मा एव शिल्पविद्यानिष्णात आसीत्। यैः प्रसाद-भवन-उद्यान-प्रतिमा-भूषण-तडाग-आराम-कूपादीनां रचना कृता। समराङ्गणसूत्रधारस्यानुसारमेतेषां माता बृहस्पतेः भगिनी आसीत्।[83] अतः विश्वकर्मा बृहस्पतेः भागनेयः। यथा-**सुतः प्रभासस्य वसोः स्वस्रीयश्च**

---

74. वाल्मीकि रामायण-22.73, महा. वन.-274.25, भाग. पु.-9.10.16
75. महाभारत- 132.8-13
76. मनसार-68.1-2
77. बृहत्सहिता अ.-57, 58
78. वास्तुविद्या प्रस्तावना पृ.-6
79. विश्वकर्माप्रकाश-13.25-27
80. भवननिवेश पृ.-4
81. भारतीयस्थापत्य पृ.-27
82. शिल्पप्रकाश-1.1-3
83. विष्णुपुराण-1.15.118

**बृहस्पतेः।**[84] ब्रह्मवैवर्तपुराणे वर्णनं मिलति यत् विश्वकर्मणः नव शिल्पकर्मणि दक्षाः पुत्रा आसन्। ते सन्ति-मालाकारः कर्मकार:शंखकारः कुविन्दकः कुम्भकारः कांस्यकारः सूत्रधारः चित्रकारः स्वर्णकारश्च। यथा -

> **ततो बभुवः पुत्राश्च नवैते शिल्पकारिणः।**
> **मालाकारकर्मकारः शंखकारकुविन्दका।।**
>
> **कुम्भकारः कांस्यकारः षडेतेशिल्पिनां वराः।**
> **सूत्रधारश्चित्रकारः स्वर्णकारः तथैव च।**
> **पतितास्ते ब्रह्मशापात् आज्या वर्णसंकरा।।**[85]

अपराजितपृच्छा शिल्पग्रन्थे विश्वकर्मणः कुलपरिचयः पृथगवलोक्यते। तत्र विश्वकर्मणः जन्म चाक्षुषमनोः वंशे अभवत्। जयः विजयः सिद्धार्थः अपराजितश्च एते तेषां मानस पुत्राः सन्तीति तत्रोल्लिखितं वर्तते। येषु जयः अपराजितश्च वास्तुविद्याविदौ आस्ताम्। जयविश्वकर्माणोः प्रश्नोत्तररूपः ग्रन्थः जयपृच्छा संज्ञकः तथाऽपराजितविश्वकर्मणोः प्रश्नोत्तररूपः ग्रन्थः अपराजितसंज्ञकः।[86] एतौ द्वौ ग्रन्थौ वास्तुविषयकौ स्तः। प्रसङ्गेऽस्मिन् बहवः सन्दर्भाः उपलभ्यन्ते। विश्वकर्मणा प्रोक्ताः कतिपयवास्तुग्रन्थाः सन्ति। यथा- वास्तुशास्त्रम्, विश्वकर्माप्रकाशः दीपार्णवः क्षीरार्णवः वृक्षार्णवः अपराजितपृच्छा जयपृच्छा वास्तुप्रदीपादयः।[87]

**मयः -**

वास्तुविद्यानिष्णातोऽसुराणां शिल्पी मय दक्षिणभारते प्रचलित द्राविड़ परम्परायाः उद्भावक आचार्योऽस्ति। महाभारते एकस्मिन् प्रसङ्गे मयः कथयति यत्-**अहं हि विश्वकर्मा दानवानां महाकविः।**[88] यथा विश्वकर्मा देवानां शिल्पी आसीत् तथैव मयोऽसुराणां शिल्पी आसीत्। रामायणे एतेषां कुलपरिचयः. वर्णितोऽस्ति। मय दितेः पुत्रः आसीत् स्वर्गस्याप्सरा हेमा तस्य पत्नी आसीत्। हेमायाः गर्भात् मायावी-दून्दुभिसंज्ञकौ द्वौ पुत्रौ तथा च मन्दोदरी संज्ञका पुत्री उत्पन्ना जाता। यस्या विवाहः रावणेन सह बभूव। अतः मयः रावणस्य श्वसुर आसीत्।[89] महाभारते मयः दनुकश्यपयोः पुत्रः मनुचेः भ्राता आसीदिति वर्णनं मिलति।[90] मयदानवः मायाविद्यायाः अप्रतिम ज्ञाता कुशलप्रयोक्ता

---

84. समराङ्गण सूत्रधार
85. ब्रह्मवैवर्तपुराण-1.10.19-21
86. अपराजितपृच्छा-34.3-14
87. वास्तुविमर्श द्वितीय पुष्प पृ.- 12
88. महाभारत सभा.-1.5
89. वाल्मीकि रामायण उत्तरकाण्ड-12
90. महाभारत आ.-2.8.39

चास्ति ।[91] मयरचितवास्तोः शिल्पस्य च ग्रन्थेषु अनेकानि अप्रतिमोदाहरणानि दरीदृश्यन्ते। यथा- पाण्डवसभाभवनम्[92] सुवर्णवनम्, सुवर्णभवनम्[93] मायानगरम्[94] त्रिपुरम्[95] वैहायसविमानम्[96], पुष्पकविमानञ्च।[97] मयेनोक्तः प्रधानग्रन्थः मयमतमिति। वर्णनं मिलति यत् मयसंहिता अपि एतेषां कृतिरासीत्

**परवर्तीसाहित्ये वास्तुवर्णनम् -**

कौटिल्य-अर्थशास्त्रे वास्तुविषयं वर्णनं प्राप्यते। तत्र वास्तो परिभाषा[98], दुर्गनिवेशः[99], ग्रामनगरराष्ट्रादीनां स्थापना[100] भवने द्वारस्थापना तथा च पुर-तोरण-प्रतोली इत्यादिशब्दानां प्रयोगः ग्रन्थकारस्य वास्तुशास्त्रीयज्ञानं प्रदर्शयति। मनुस्मृतौ ग्राम-गुल्म-राष्ट्र-दुर्गादीनां प्रसङ्गे वास्तुशास्त्रस्य चर्चा मिलति।[101] शुक्रनीतौ अपि भूमिभवनम्, राजधानीप्रकल्पनम्, राजप्रासादः, दुर्गः राजमार्गः प्रतिमानिर्माणम् तथा च मन्दिरनिर्माणादयः वास्तुशास्त्रीयविषयाणां चर्चा उल्लिखिता सन्तीति।[102] आगम साहित्येऽपि प्रचुर वास्तुशास्त्रस्य परिचर्चा उपलभ्यते। आगमसाहित्येष्वपि कामिकागमस्य अष्टचत्वारिंशद्-पटलेषु वास्तुविद्यायाः वर्णनं मिलति। अस्यातिरिक्तं कर्णागमस्य तालमानं सुप्रभेदागमस्य च प्रासादपटलः विशेषोल्लेखनीयौ स्तः। आगमग्रन्थेषु मूर्तिनिर्माणं विशेषरूपेण लिङ्गोद्भवशैवप्रतिमानां साङ्गोपाङ्गविवेचनं प्राप्यते।[103] अग्निपुराणे मूर्तिस्थापनप्रसङ्गे पञ्चविंशतितन्त्राणमुल्लेखः कृतो विद्यते।[104] मेरुतन्त्रे शक्तिग्रामशिवलिङ्गानां विशेषरूपेण विशद्वर्णनमुपलभ्यते।[105] बौद्धसाहित्येष्वपि प्रासाद-हर्म्य-गुहा-विहार-मण्डपादीनां प्रसङ्गे वास्तुशास्त्रस्य वर्णनं मिलति।[106] वराहमिहिरस्य वृहत्संहितायामपि

---

91. वाल्मीकि रामायण किष्किन्धा. 51.10
92. महाभारत सभा.-15.5.9-12
93. तत्रैव-51.11
94. तत्रैव-12.8-9
95. शिवपुराण 5.2
96. भागवत्पुराण-8.10.16-17
97. वाल्मीकि रामायण सुन्दरकाण्ड
98. अर्थशास्त्रम्-2.8
99. तत्रैव 2.4
100. तत्रैव-2.1, 6
101. मनुस्मृतिः-7.114
102. शुक्रनीति-1.193-274, 4.4.74-206
103. भारतीयस्थापत्य पृ.-36-37
104. अग्निपुराण 39.1-5
105. मेरुतन्त्र-5.588-665, 9.69-101
106. भारतीयस्थापत्य पृ.-33

पञ्चाध्यायाः वास्तुसम्बन्धिनः सन्ति।[107] ज्यौतिषशास्त्रदृष्ट्याा वास्तुशास्त्रम् ज्यौतिषशास्त्रस्य एको भागोऽस्ति अस्योल्लेखः संहिताविभागे भवतीति।

**वास्तुशास्त्रीयग्रन्थाः -**

वास्तुशास्त्रीयग्रन्थाः द्वौ श्रेण्यौ उपलभ्येते। प्रथमा विश्वकर्मापरम्परा नागररीतिः वा द्वितीया मयपरम्परा द्राविणरीतिः वा। विश्वकर्मापरम्परायाः प्रमुखाः ग्रन्थाः सन्ति- वास्तुशास्त्रम् अपराजितपृच्छा जयपृच्छा कृष्णार्णवः विश्वकर्मामत्, अपराजितप्रभा (विश्वकर्मसंहिता) आयतत्त्वम् ज्ञानरत्नकोषः वास्तुप्रकाशः वास्तुनिधिः वास्तुसंग्रहः वास्तुसमुच्चयः विश्वकर्मीयः सनत्कुमारस्य वास्तुशास्त्रम् समराङ्गणसूत्रधारः युक्तिकल्पतरुः वास्तुशास्त्रबल्लभः (राजवल्लभमण्डनम्) प्रासादमण्डनम् रूपमण्डनम् राजसिंहस्य वास्तुशास्त्रम् भुवनप्रदीपः बृहत्छिल्पशास्त्रम् मानसोल्लासः वास्तुरत्नावली, वास्तुमुक्तावली दीपार्णवः क्षीरार्णवः वृक्षार्णवः स्वर्गार्णवः परिणाममंजरी, वास्तुकौस्तुभः कलानिधिः रत्नतिलकः सूत्रप्रतानः देव्याधिकारः शिल्पप्रकाशादयः।[108]

मय परम्पराया प्रमुखाः ग्रन्थाः सन्ति- मयमतम् मानसारः चित्रलक्षणम् कश्यपशिल्पम् सकलाधिकारः वास्तुपुरुषविधानम् प्रयोगमञ्जरी प्रयोगपारिजातः शिल्परत्नम् शिल्पसंग्रहः शुक्रनीतिः ईशानशिवगुरुदेवपद्धतिः हरिभक्तिविलासः मठप्रतिष्ठा मनुष्यालयचन्द्रिका चतुर्वर्गचिन्तामण्यादयः।[109]

वास्तुकोषे डॉ. प्रसन्नकुमाराचार्येणापि वास्तुशास्त्रीयनूतनग्रन्थानामेका विस्तृता सूची प्रदत्ता। येषां ग्रन्थानां सूची आचार्येणात्र संकलिता कृता ते सर्वे आधुनिकदृष्ट्याा वास्तुशास्त्रस्य विचारका सन्तीति। तेषां नामानि[110]- स्टेला क्रेमरिशः कुमारस्वामी प्रसन्नकुमाराचार्यः वासुदेव उपाध्यायः वासुदेवशरण अग्रवालः गोपीनाथ रावः जितेन्द्रनाथबनर्जी रामकृष्णदासः द्विजेन्द्रनाथशुक्लः तारावद भट्टाचार्यः मल्लाया, विनयतोष भट्टाचार्यः वृन्दावन भट्टाचार्यः सरस्वती हैवेलस्मिथ मार्शललागहर्स्ट चान्दा, वत्सः पर्सीब्राउनः श्रीनारायणचतुर्वेदीढाके लोवरड्राविडदेशः जेम्स्फगुर्सन जेम्सबर्गेसः सतीशग्रोवरः एन.एम.गांगुली देवलमिश्रः अखनजानसनः वाल्टरहेन निस्मरः यजदानी सुरेन्द्रस्टुटली एलिसबोनरः इत्यादयः।

---

107. वृहत्संहिता अध्याय-53.56-59
108. वास्तुशास्त्र-1, पृ.-83
109. वास्तुशास्त्र-1, पृ.-81-83
110. वास्तुशास्त्रविमर्शः-2 पृ.-16

# साम्प्रतिकसमाजे बौद्धशिक्षायाः योगदानम्

डॉ. ऋषिराजः

शिक्षा एका एतादृशी प्रक्रिया अस्ति या मनोवैज्ञानिकरूपेण मानवस्य जन्मजातशक्तीनां स्वभाविक-सामंजस्यपूर्णविकासे च योगदानं ददाति। तथा च जनान् समाजे सामञ्जस्य स्थानाय साहाय्यं करोति। शिक्षा मानवस्य व्यवहारे दृष्टिकोणे च एतादृशं परिवर्तनं करोति, यत् समाजाय, राष्ट्राय, विश्वस्मै च विश्वाय हितकरं भवति। बालकस्य भाविजीवनस्य प्रगतिः, उदात्तादिव्यवहाराः शिक्षाश्रिता एव भवन्तीति नात्र संशयापत्तिः। शिक्षाशब्दः संस्कृतव्याकरणस्य **"शिक्ष् विद्योपादने इत्यस्माद्धातोः गुरोश्च हलः" इति सूत्रेण 'अ' प्रत्ययेन"**[1] निष्पद्यते। अस्याशयोऽस्ति यद् ज्ञानार्जनं विद्याग्रहणं वा अर्थात् शिक्षाप्राप्तिमाध्यमेन मानवेषु संस्काराणां व्यवहाराणाञ्च निर्माणमेव शिक्षा इत्यभिधीयते। पुनश्च आङ्लभाषायाः **'Education'**[2] इति पदस्य व्युत्पत्तिः लैटिनभाषायाः 'E' (ए), 'DUCO' (डूको) इति द्वयोर्शब्दयोर्मेलनेन अभवत्। अत्र E शब्दस्य अन्ततः क्ब्ब इत्यस्य बहिरानयनम् इति अस्य शिक्षाशब्दस्यार्थो भवति। एवञ्च लैटिनभाषाया **एडूकेयर (Educare)** इत्यस्यार्थोऽस्ति **'To Educate, To bring up, to raise'** इत्यादयः। शिक्षायाः विषये अरस्तु महोदयेनोक्तं- **"स्वस्थे शरीरे स्वस्थमनसः विकास एव शिक्षेति।"**[3]

भारतीयशिक्षायाः आविर्भावः प्राचीनकालात् एव मन्यते। पुरातनकाले भारतीयशिक्षा वैदिकशिक्षाबौद्धशिक्षारूपेण प्रचलति स्म। वैदिककालीनशिक्षा खलु धर्मानुप्राणिता आसीत्। परञ्च वैदिकोत्तरकाले वैदिकशिक्षायां ज्ञानकर्मणोः समन्वयस्य ह्रासः सञ्जातः। तस्मिन् समये यज्ञेषु बलिप्रथा समाविष्टा आसीत्। तथा च **"स्त्रीशूद्रादीनां कृते श्रुतिर्निषिद्धा जाता इति मन्यन्ते स्म।"**[4] ब्राह्मणेत्तरवर्णानां मुक्त्यर्थं भारतवर्षे सौभाग्येन तस्मिन्नेव काले ई० पू० 563 वर्षे महात्मनः गौतमबुद्धस्याविर्भावः जातः। गौतमबुद्धेन प्रचलितशिक्षाव्यवस्थायाः समयानुसारं परिवर्तनं कृतम्। ब्राह्मणशिक्षणपद्धत्याः पतने सति भारते एका नूतनशिक्षा प्रादुर्भूता या बौद्धशिक्षा इति नाम्ना ज्ञायते। बौद्धशिक्षायाः प्रकृतिः **"वसुधैव**

---

1. "संस्कृत हिन्दी शब्दकोश", वामन शिवराम आप्टे विरचितं, रचना प्रकाशनं-जयपुरम्, संस्करणं-2007, पृष्ट सं० 1015
2. "शिक्षा के दार्शनिक एवं सामाजिक आधार", प्रो० के० पी० पाण्डेय, विश्वविद्यालय प्रकाशन, वाराणसी
3. "शिक्षा दर्शन", प्रो० भास्कर मिश्र, नाग पब्लिकेशन, जवाहर नगर-नई दिल्ली, प्रथम संस्करण-2008
4. "स्त्रीशूद्रद्विजबन्धूनां न वेदश्रवणं मतम्।" देवी भागवतम् 1.3.21.

